# संगीत माधवम्

महाकवि

श्रीभाष्यं विजयसारथि

विरचितम्

सर्ववैदिकसंस्थानेन प्रकाशितम्

प्राप्तिस्थानम्

1. सर्ववैदिकसंस्थानम्
केन्द्रकार्यालयम्
यज्ञवराहक्षेत्रम्
करीण्नगरम्
आन्ध्रप्रदेशः

2.एस्.बि. वरप्रसादशर्मा
फ्लाट् नं - २०४
सायी सन्ध्या अपार्टमेंट्
३-६-६६१४६६२
स्ट्रीट नं - ९
हिमायतनगर
हैदराबाद
आन्ध्रप्रदेशः

डा.श्री जिन्नारं धनराजकुमार (नव्यचिलड्रन हॉस्पिटल, मेदक)
महोदयस्य अर्थसहकारेण मुद्रापितम्

मूल्यम् - रू. २५.

## संगीत माधवम्

भीमपलास्रागः - आदितालम्

श्रीहरि रवतान् मामतिदीनं
शरणागत मिम मधुना हीनम्     श्री ॥

पापात्मानं कुटिलं कुमतिं
पतिताचारं क्रूरविचारम्
उद्धत मवशं पुण्यविदूरं
क्रुद्धं सिद्धविरोधिन मगतिम्     श्री ॥

विविधविषयपरिद्रितापज्वाला -
लीढं गाढतमाधिव्याधिम्
दारिद्र्यानलदग्ध मनस्कं
तरणोपायान्वेषणरहितम्     श्री ॥

किरतु सदा मयि करुणामृतरस -
धारारंगदपांगतरंगम्
मुररिपु रनिशं मम परितापं
हरतु ददातु विवेकं मह्यम्

कुसुमपेशलं विषमालोचन -
विषलतिकाऽऽमयमूर्छित मवशम्
विविधवेदनातान्त मशान्तम्
स्वान्तं सुखयतु मंक्षु नितान्तम्     श्री ॥

पाण्डवविजयविधायी मायी
राधाकान्ताकामी स्वामी
विजयसारथे रमरभारती -
कवितावनिता हृदयोल्लासी     श्री ॥

## २ कल्याणी रागः- आदितालम्

विलसतु वनमाली हृदि मम परिभूतांशुमाली - विल

यमुनातीरे मधुरसमीरे
वल्लवतरुणीबृन्दविहारी
हारी राधामानसहारी
अघपरिहारी मुरसंहारी — विल

अहिपतिशायी जगदतिशायी
कमलाधरमधुपायी मायी
सुररिपुविजयी विजयी विनयी
मुनिमणि सुमनो हृदयाधायी — विल

शेषी दासजनावलि तोषी
दोषविदूषी हितपरिपोषी
शेषभूतनिखिलात्मविलासी
भूषणभासी स्मितपरिभाषी — विल

विजयसारथी रमणीयाकृति

रजशुभदायी जगदाधायी

विजयसारथे रमरभारती -

कविताववनितोल्लासविधायी विल

३ मालकौंस रागः - आदितालम्

लगतु मनो मे राधारमणे

सन्तत मव्यभिचरितं निरतम् लग ॥

जगदाधारे रसनामधुरे

पापविदूरे करूणापूरे

निगमगोचरे मामनोहरे

नन्दकुमारे गोपकिशोरे लग ॥

धरणीदारे नतमन्दारे
　　दानवमारे श्रितबृन्दारे
धीरोदारे मीरगभीरे
　　श्यामसुन्दरे बृन्दाजारे　　　　　　　　　　लग ॥

भवमरुकाननदूनजनावलि -
　　भव्यानन्दामृतकासारे
ससलिलजलधरचारुशरीरे
　　श्रुतिवनितामणिहृदयविहारे　　　　　　　　लग ॥

मायापारे मञ्जुलहारे
　　सम्मदसारे संसृतितीरे
विजयसारथे मधुरभारती -
　　कविताहृदयाञ्चितशृंगारे　　　　　　　　　लग ॥

## ४ श्री रागः - आदितालम्

मनसा कलये राधाकृष्णं मुरलीकृष्णम् मन ॥

लीलामानुषवेषं श्रीशं
लीलाभूतिविलोलं बालम्
वेलातीतं विश्वाकारं
लालितधरणीदेवं देवम् मन ॥

गोपवधूटीमानसचोरं
गोकुलबृन्दावनविहारिणम्
गोपकिशोरं गोवर्धनगिरि -
धारिण मीशं महदणुरूपम् मन ॥

अरिदरनन्दकशार्ङ्गायुधमणि
मण्डितपाणिं मञ्जुलवाणिम्
शेषशायिनं मुक्तिदायिनं
सागरतनयाहृदयमोहिनम् मन ॥

कालीरमणाराधितचरणं
    कलिकलुषान्तक मागमवेद्यम्
विजयशालिनं विनतपालिनं
    विजयसारथे श्शरणं वरदम्  मन ॥

## ५ मोहनरागः- आदितालम्

सेवे मनसा श्रितजनपरिपालम् - गोपालम्  से ॥
    वचसा वपुषा राधालोलम्  से ॥

तुम्बुरुनारद गायकमुनिमणि
    सन्ततसंस्तुतपूतचरित्रम्
शंबररिपुशतसंभ्रमजनकं
    कम्बुकन्धरं कमलारमणम्  से ॥

मायानाटकसूत्रधारं
    मायामेयं मायावेद्यम्
मायातीतं मायामहितं
    मायामय मयमय मानन्दम्  से ॥

जगदाधारं जगदाधेयं
    जगदाकारं जगदानन्दम्
जगतीकान्ताकान्तं शान्तं
    दान्त मनन्तं क्रान्त मतान्तम् से ॥

जलदश्यामलसुन्दरगात्रं
    सरसिजनेत्रं करधृतवेत्रम्
अविदितमात्रं सन्नुतिपात्रं
    मंगलगोत्रं पाण्डवमित्रम् से ॥

क्षीरपयोनिधिवीचितुषारा -
    सारतारकितचारुशरीरम्
मधुरज्योत्स्नापूरं धीरं
    विजयसारथेः कवनविहारम् से ॥

## ६ शंकराभरण राग :- आदितालम्

बालमुरलीकृष्णं भज रे जन बा ॥

मधुरबृन्दावनविहारं
मन्दराचलधारिणम्
नन्दनन्दन मिन्दिरापति
मिन्दुसुन्दरमोहनास्यम् बा ॥

कुन्दरदनं मुचुकुन्दवरदं
सुन्दसूदन मीश्वरम्
श्यामसुन्दर मिन्द्रवन्दित
ममरबुन्दानन्दकन्दम् बा ॥

मन्दमन्दस्मितमनोहर
मञ्जुलाधरबिम्ब माद्यम्
नवतमालविनीलपल्लव
वल्लरीरुचिलालितम् बा ॥

मुरलिगानसुधासुधारा -
परवशीकृतगोपहृदयम् बा ॥

नवशिखण्डि सुपिञ्छलाञ्छन

मवनिवनितावल्लभम्

सवननारायण मुपेन्द्रं

शार्ङ्गिणं मधुरापतिम् बा ॥

प्रणवपञ्जरचारुकीरं

प्रणयलीलावनमयूरम्

विजयसारथिमधुरकविता

नववधूमणिहृदयचोरम् बा ॥

## ७. हिन्दोल रागः- रूपकतालम्

देवदेव वासुदेव दिव्यभाव पाहि माम्

पद्मनाभ वरदराज परमपुरुष श्रीहरे देव ॥

पाहि पाहि नवशिरीषकुसुममसृणमोहनांग

देवकीकुमार वरद दिव्यभव्यरूप दयया देव ॥

अवितु मेहि मामुदार भवविकारविकलहृदम्
त्वं हि शरण मिति विभाव्य पादमूल मुपागमम्
देव ॥

व्रजकिशोरनिगममकुटविनुतचरित जगदधीश
अजभवादिमामरालिमौलिलालितांघ्रियुगल देव ॥

इन्दिरामनोरविन्दनवमरन्दरतमिलिन्द
श्रीमुकुन्द कुन्दरदन नन्दनन्दनेन्दुवदन देव ॥

अन्यथास्ति न मम शरण मच्युत त्वमेव शरण
माश्रिताश्रयादि देव परमपुरुष पाहि माम् देव ॥

८. साकी - भीम पलास् रागः- आदितालम्

पाहि मुरारे मधुकैटभारे
प्रणतं स्वाश्रित मेनं शौरे पाहि ॥

जय दामोदर जय नारायण
जय विजयाश्रय जय विद्यालय

जय गोविन्द मुकुन्द जनार्दन
जय मुनिमोहन कृष्ण हरे पाहि ॥

दयनीयाना मह मति मुख्यो
दयमानानां त्वमसि श्रेयान्
इति मत्वा तव पद युगमूलं
शरण मुपागतवा नह मधुना पाहि ॥

परमो भवतो नास्ति वदान्यो
वरदो लेके सुरवरनिकरे
इति मत्वाहं तव पदमूलं
समुपागतवान् शरण मगत्या पाहि ॥

स्थिरचर रचना स्थिति गतिनिद्रा -
मोहविकारान्तादिनिदानम्
त्व मधीश्वर इति तव पदमूलं
शरण मुपागतवा नह मधुना पाहि ॥

## ९. मालकौंस् राग :- त्रिपुटतालम्

मञ्जुला मम भावना मधु -
सूदने रमते सदा
अञ्जिता निजसंविदा रस -
रञ्जिता मधुरा ऽञ्चिता म ॥

मनसि काऽपि निरन्तरं मधु -
माधुरीपरिपूरिता
द्योतते मम विमलकलना
तलतलात्कृतिलालिता म ॥

वहति काऽपि सुधाधुनी मम
हृदयकेदारान्तराले
विषमतापाकुलितहृदयं
शीतलीकुरूते ऽधुना म ॥

सत्-समाधि रुपागतो मां
काऽपि शान्ति रुपागता
काऽपि कम्रा भावलहरी
पुलकितं तनुते ध्रुवम् म ॥

प्रणवझंकृतिमयकला मम
काऽपि नवनवकाकली
हृदयवीणां वादयति नव
रागभावश्रुतिमनोज्ञाम् म ॥

काऽपि भग्नावृति रुदारा
चित्कला परिभासते
गलितबाह्यविनोदविषया
परकलातादात्म्यकलिता म ॥

विजयसारथिललितकविता -
रसधुनी हरिभक्तिमधुरा
परमभागवतावली मा -
प्लावयतु सुखदायिनी म ॥

## १०. मालकौंस् रागः- आदितालम्

मानस मिनु मिनु माधव मधुना
मानमदा वपहाय सुविधिना मा ॥

चेतो भज भज चिन्तातीतं
चिदचिल्लनामणिसंवीतम्
रसने कीर्तय राधारमणं
रागसुधारसवर्षुकनयनम् मा ॥

मस्तक नम नम मायाऽमेयं
मञ्जुलमूर्तिं धुतविनतार्तिम्
श्रवणाकर्णय सारसलोचन -
सारकथां रसभरितां ललिताम् मा ॥

पश्य निरन्तर मक्षियुगल परि -
पूर्ण चन्दिरसुन्दरवदनम्
घ्राण सदा परिजिघ्र मुरारे
रंघ्रिसरोरूहपरिचिततुलसीम् मा ॥

करयुग पूजय कमलाकान्तं
करुणामृतरसपारावारम्
याहि याहि पदयुग नारायण -
दिव्यालय मधिलीलानिलयम् मा ॥

स्वीकुरु संविन्मानिनि मधुरं
चिन्मनोहरं निजभर्तारम्
आत्मन् सौवं सर्वस्वं हरि
दिव्यसन्निधा वुपहारं कुरु मा ॥

## ११. हिन्दोलरागः- त्रिपुटतालम्

कोमला नवतमालश्यामलांऽबुदमञ्जुला

बालमुरलीकृष्णमूर्ती राजतां मम मानसे को ॥

चञ्चलाभि रचञ्चलाभी रञ्जिता वनमालिनी

भ्रमरकाञ्चितलसदलीका रुचिरमेचकशेखरा को ॥

प्रकृतिमहिलोल्लासिनी मम विविधतापविनाशिनी

स्थिरचरान्तर्यामिनी परवासुदेवमयी ऽऽ मयी को ॥

व्रजकुटीरविहारिणी श्रुतिशिखरचयसंचारिणी

मुनिमनोन्मनिमानिनीमणिमोहिनी नवमोहिनी को ॥

चिदचिदैकाकारिणी चिदचिद्विकासनशीलिनी

विजयसारथि सरसकवितानवनवोन्मेषविभाविनी को॥

## १२. मोहनरागः- जंपतालम्

गोविन्द मानन्दसिन्धुं मुकुन्दं
वन्दे रविन्दाक्ष मिन्द्रादिवन्द्यम् गो ॥

यदुवंशवाराशिशीतांशु मीशं
निशितांशु तुहिनांशुदृश मंशुमन्तम्
आभीरभामिनी मधुरमानसरतम्
संसारतरुमूल मोंकारवाच्यम् गो ॥

इन्दीवरश्याम मिन्दिरानन्ददं
वन्दारुबृन्दारमन्दारभूरुहम्
अक्रूरहृन्नलिनकासारसूरं
क्रूरामराराति गोत्रदंभोलिम् गो ॥

भक्तचातकजातजीवातु मेनं
मद्भावनारंग मधुरलास्यप्रियम्
चित्-सुन्दरीमञ्जुहृदयारविन्दैक
सौन्दर्यमकरन्दमाद्यदिन्दिन्दिरम् गो ॥

लसदिरम्मदपूर मसमेषुविषमेषु
मसमलोचनविनुत माम्नायागोचरम्
मधुरमुरलीक्वाणपरवशीकृत जनम्
विजयसारथिललित भारतीजीवनम् गो ॥

## १३. दर्बारकानडरागः- आदितालम्

हृदयविपञ्चीं वादय मधुरं
मोहनगीतं गाय हरे हृ ॥

रागश्रुतिलयभावरसामृत -
मधुरिमलहरीलालितवर्णम्
आदिपरापरिजागृतिनिरतं
पश्यन्तीस्फुटशक्तिविलासम् हृ ॥

श्रुतिकुहरं दूरावव्यथितं
सिञ्च सुधारसवर्षेणेश्वर
तिमिरोपहते नयने नूतन -
सुषमोन्मेषं व्याकुरु नितराम् हृ ॥

मधुरभावनारंगे नर्तय
चिन्मयी मिमां मधुरलासिनीम्
संविन्महिलां मानय मधुरय
जीवनयात्रां कलया कलिताम् ह ॥

मधुरवासनाभरितं सुरभय
बृन्दावन मनुभावमयम्
जीवकला मानन्दय निरतां
भक्तिसुन्दरी मनुमोदय ताम् ह ॥

## १४. दर्बारकानड रागः- आदितालम्

हे प्रभो जगदेकबन्धो विनतजनचिन्तामणे हे ॥

विश्वभावन विश्वमोहन विश्वधारण विश्वपाः
विश्वमंगलगाननिरते विश्वनाटकनिर्मिते हे ॥

जगदिदं बृन्दावनं बहुपुष्पफलतरुराजितम्
विविधकुञ्जनिरञ्जितं तव दर्शनो त्सुक मीक्षते हे ॥
भावना यमुनातटसैकते प्रतिवीक्षते
जीवभूता गोपवनितावितति रधुनोत्कंठया हे ॥

विरहविधुरा गोपललना स्ता इमाः पुन रेकवारम्
मधुररासक्रीडितै रिह परवशीकुरु सौवभूम्ना हे ॥

विषमभौतिकवेदना परिदूनहृदयक्षेत्र मधुना
मुरलिगान सुधोरुधाराप्लावितं कुरु करुणया हे ॥

### १५. कल्याणीरागः- आदितालम्

एहि हरे परमेश मुरारे
दीन ममुं परिपालय शौरे एहि ॥

संसृतिसरसीं विगाहमानं
दुर्विधताभिधमकरव्यथितम्

दास मिमं गज मनितरशरणं
जीवच्छव मव पूरय कामम् एहि ॥

कामसुयोधनदूषितचरितां
दुष्कृतदुश्शासनकृतभंगाम्
मतिपाञ्चालीं दीना मेनां
मानभंगतो रक्ष विशीर्णाम् एहि ॥

चिरविरहानलतापशिखावलि -
विकलितहृदयां संविद मेनाम्
राधारमणीं प्रेम्णा रञ्जय
लालय गाढालिंगनभूम्ना एहि ॥

गुणमणिनिचितां सूक्तिमालिकां
दधतीं कंठे चिन्मानवतीम्
ध्यायन्तीं त्वा मेव दिवानिश
मेनां स्वीकुरु मा मिव मनसा एहि ॥

## १६. वसन्ततिलकामोदरागः- आदितालम्

अनुमोदय मां निजपददासं
दीनजनावनलोल हरे अनु ॥

आशामृगतृष्णालिपरीते
दुर्विषयाशीविष विपरीते
रागद्वेषशरारुमृगादन
भीषणगर्जिततर्जिततुमुले अनु ॥

प्रतिपद मापत्यसिपत्र तते
कामकोप मदचोर शरण्ये
ऋणनिन्दापरितापदवानल -
विसृमरकीलोल्काविलवलिते अनु ॥

आधिवेदनाव्याधिविषलता
कुलिते संसृतिमरुकान्तारे अनु ॥

विचरन्तं मां खिन्न ममृतमय
मापय दिव्यं निरपायपदम् अनु ॥

## १७. मोहन राग :- आदितालम्

प्रीणय मोहन भवदनुरक्ताम्
    प्रेममयीं चिल्ललना मेनाम्    प्री ॥

कामयमानां त्वा मेव हृदा
    स्वाधीनपतिका मिव ता मेनाम्
हावभावशृंगारकलाञ्चित -
    ललितविलासै र्लालय नितराम्    प्री ॥

आत्मानं निजहृदयमन्दिरं
    मधुरभावनाकलया ऽ मलया
त्रिकरणशुद्धां समलंकृत्य च
    वासकसज्जा मिव संसिद्धाम्    प्री ॥

## १८. मोहनराग : - आदितालम्

मधुरिमसदनं मञ्जिमनिलयं
प्रदिमनिधानं हरि माकलये म ॥

यस्य मुरारे रंघ्रितले कुव-
लाञ्जलि रभवन् घोषयोषिताम्
नाभीसरसि कटाक्षा मीना/ रवा
असमांबकशितविशिर्का हृदये म ॥

कंठे हरिमणिखचिता हारा
मधुपा मधुरे वदनसरोजे
पिञ्छापीडा अलकविताने
तमनारत मनुचिन्तये हृदा म ॥

यस्योरो मालीलासदनं
यस्य दृशौ निशितांशुहिमांशू
यत्पदगलिता सुरतरंगिणी
चन्द्रशेखरशिरोजमालिका म ॥

यन्नाभीसरसीरुहान्तरे
चतुरास्यो मदबंभरायते
गोला न्यखिला न्युदरपुटे पर -
माणुरेणुवद् भान्तियदीये म ॥

## १९. दुर्गा राग : - आदितालम्

नन्दयशोदातनयं वन्दे
बालं लीला लालित चरितम् न ॥

बिम्ब्रस्तालक मरुणाधरपुट
मम्बुरुहायतमोहननयनम्
मुक्ताभूषणमुकुलीकृतशिति
काकपक्षधर मरुणपदाब्जम् न ॥

अंगुलिशिखरै ररुणकान्तिभिर्
विवृतपिहिततद्विवरं वेणुम्
वारं वारं मुखमरुता परि
पूरयन्त मिम ममृतोदारम् न ॥

मधुरस्मितसुरभीकृतवदनं
मदशिखिमेचकलांछितचिकुरम्
मुकुरमसृण रुचिमयकपोलतल
बिंबित मंजुलकुण्डलभासम् न ॥

जानुचरं संक्रान्तं निजमुख
बिंबं मणिमयमन्दिरान्तरे
आदित्सुं तस्यानुपलाभात्
धात्री मवलोक्य विषीदन्तम् न ॥

शिञ्जाशिञ्जित रभसै रंगण
रंगे रिंगै र्मधुर मटन्तम्
झणझणझंकृतिसंकुलकंकण
चंकनदंकित ललितकराब्जम् न ॥

अतिसंबाधे सुरभीणा मनु
यान्ती मंबा मायासयन्तम्
अंगलग्नजंबालपरागं
लंबालक मवलंबं जगताम् न ॥

विलसदहस्करकोटिविजित्वर
तेजोलहरी चुंबितमूर्तिम्
कोटीरम्मदधागधगीकृत
सकलांशं शशिकोटिसमानम् न ॥

## २०. मालकौंसराग :- आदितालम्

जय जय देव हरे - ए - ए - ए ज ॥

मम दृकुतारोदारमरीचे
मम विमलाननमधुरमरीचे
मम हृदयांबर निशितमरीचे
मम हृदयांबुधितुहिनमरीचे ज ॥

मम मतिसुदतीरञ्जन मञ्जुल
रागमयूरश्यामलजलधर
स्मृतिकलकण्ठी स्वरपरिकल्पन
नवनवकिसलरसालतरो ज ॥

## २१. दर्बारकानडरागः- त्रिपुटतालम्

हे दयामय लोकबन्धो
दीनपोषक पाहि माम्
पतितपावन परमपूरुष
व्रजविमोहन श्रीहरे हे ॥

कमललोचन कंजजनिभव
कारणाच्युत करुणया
पाहि यमुनावाहिनीरस
केलिलीलालोल माम् हे ॥

ललितवल्लववल्लभामणि
पाणिपल्लववेल्लितम्
रासरसमयमधुरहृदयं
व्रजकिशोरं त्वां भजे हे ॥

सुरजनावन घनमनोहर
सुरुचिरालक संश्रितम्
मुरलिमञ्जुलमुग्धमोहन
मुररिपो परिपाहि माम् हे ॥

## २२. दुर्गा रागः- दादरतालम्

श्रीरमते धीरमते चिन्निरते पाहि सदा
नौमि परं कमपि सुरं शरण मरं पाहि हरे श्री ॥

देव नवेद्मि निगमविधान
मीष दपीश पापरतम्
बालिश मधमं कुटिलविचारं
पाहि दयामय मा मवशम् श्री ॥

अर्चामि नान्यं प्रणमामि नान्यं
भवत उदार चारुकृते
न भजामि कंचन शरण मवैमि
तत्व मसीति भवन्त मनन्त श्री ॥

नन्दकुमार नवनीतचोर
बृन्दाविहार नवतारहार
सिन्धुगभीर जगदेकवीर
सुन्दसंहार पाहि सदा श्री ॥

## ६० २३. मोहन राग :- आदितालम्

मनसि मन्महे यदुकुलतिलकं
मदनमदन गोपालं - बालम् म ॥

अतसीन्दीवर यामुनजलजल
मुक्तमालदलवल्लरिहरिमणि -
शकलमालिकातलतलनीलिम
मञ्जिममंगलमोहनरूपम् म ॥

वल्लवतल्लजतल्लिमतल्ली
प्रोल्ललहल्लकपल्लववेल्लित -
ललितकरांगुलिशंपालालित
चारुचिकुररुचिरञ्जितमौलिम् म ॥

सकलमुकुलसुममञ्जिमरञ्जित
नन्दनसमबृन्दावनसुषमा -
कमलामानसविवशीकरणो
दारमुरलिकलगानविलोलम् म ॥

७ ० २४. वसन्ततिलकामोदरागः- आदितालम्

आलोकय मे त्रिभुवनमोहन
कोटिसुमशरसुन्दरमूर्तिम्
व्रजरमणीमणिसुलभा ममलां
ब्रह्मादीना मपि दुष्प्रापाम् आ ॥

यमुनेति धिया या मवलोक्य वि -
गाहते तृषा गोगणो ऽ निशम्
जलदधिया वनकेकिसमूहो
विकचीकृतनिजपिञ्छो नृत्यति आ ॥

यमुनातीरतमालपल्लवा -
वलिरिति मत्वा या मवचेतुम्
अवतंसायाभीरसुन्दरी -
निकरो वेल्ल त्यह महमिकया आ ॥

मञ्जुलवञ्जुलशिखरराजितां
गोपीसिचयनिचयापहारिणीम्
मुरलिगानविवशीकृतहरितं
कोटितटिल्लतिकावलिवलिताम् आ ॥

## ३ ० २५. हिन्दोलरागः- आदितालम्

कलये मधुरं चरितं शौरे
रमृतोदारं मनसा ऽ हम् क ॥

सप्त सागरा नाल मभूवन्
रोमरन्ध्र परिपूर्तिविधाने
किटिजन्मनिकिल यस्य यशोदा
स्नपयामास तमेव वारिणा क ॥

यस्य दयामृतशीकरबिन्दो
रभिनवतरुणीरूपमनोज्ञा
अमरसुन्दरी जाता स्थविरा
कुब्जा दासी विकृताकारा क ॥

दारुणदमुनाः कबलित एवं
शिशुना येन निजास्यसरोजे
गोवर्धनगिरि मुद्धृत्य च गो -
गोपान् योऽय मवाव विभीतान् क ॥

काकोलानलकीलाभीलं
　　समदं कालिय म स्ववशेषम्
कृत्वा योऽयं तत्-फणासुनिज
　　नृत्तकौशलं प्रकटीकृतवान् 　　　　　　　　क ॥

## १ ८ २६. कल्याणी रागः- आदितालम्

वरदराज नय मामरं तमु -
　　दारदेश मनाकुलम् 　　　　　　　　व ॥

क्रूरतापरवञ्चनापरि
　　वादमेदुरगर्विता
स्वार्थपरता द्रोहचिन्ता
　　चण्डता नैवासते तम् 　　　　　　　　व ॥

कोपशापरितापपीडना
　　विविधवेदना विषमभावना
द्वेषरागमदवैरमत्सरा
　　यत्र नैव समुपासते तम् 　　　　　　　　व ॥

## २७. यमन् कल्याण राग :- आदितालम्

कृष्ण हरे रघुराम हरे भृगु
राम हरे बलराम हरे
अव कृष्ण हरे जय कृष्ण हरे
व्रज कृष्ण हरे मम कृष्ण हरे कृष्ण॥

वैरमयं काकोलं निवमन्
हृदयकालियो मदमत्तो ऽ यम्
धुनुते जनता मवरुह्यापा -
कुर्वन् तन्मद मिह नृत्य हरे कृष्ण॥

मधुरभावनारचिते ललिते
भावोद्याने रागमनोज्ञे
भक्तिमालतीलतिकाकुञ्जे
चित्-सतीक्षते तामनुरञ्जय कृष्ण॥

## ० २८. नीलांबरी राग :- आदितालम्

मधुरय हृदयं मुरलीमोहन
 अमृतवाहिना मधुरवेणुना म ॥

मुखरय वेदा नुन्मदया खिल -
 लोकं नाकय धरणीलोकम्
क्षितिजान् किसलय विद्रवयाद्रीन्
 गा आनन्दय विवशय हरिणान् म ॥

गोपान् संभ्रम योन्मीलय मुनि
 निकरं परितो व्यातनु रागम्
प्रणवार्थं समुदीरय भावं
कुसुमय संविद मुपलालय हे म ॥

## 12 0 २९. मालकौंस रागः- त्रिपुटतालम्

मञ्जुला सुमकोमला मति -
    मालती समुपागता
आगता तव सुन्दरी नव -
    मालती लतिका गृहम् म ॥

तलतलन्नवमेखलामणि -
    धगधगद्धगितांबरा
चकचकद्गतिमधुरलीला
    लास्यलालितपदसरोजा म ॥

हरिणचञ्चललोचना दर -
    हसितसुन्दरमधुरवदना
निजदृगञ्चलचञ्चदभिनय
    रागरसमयवीक्षणा म ॥

मञ्जुमञ्जुलशिञ्जितक्कण
    मधुरिताखिल दिग्दिगन्ता
नववसन्तश्रीरिव प्रस -
    वस्मिता तिलकाञ्चिता म ॥

## ३०. भैरवी राग :- आदितालम्

मधुरं मधुरं कलयत सुजना
मोहनमूर्ते रमलं चरितम्   मा॥

गाढाश्लेषं विजहिहि दलितौ
परिरंभेण हि यमलार्जुनकौ
छुरितं मादिश हेमकशिपु रपि
नीतो नखरै र्निशितै र्मरणम्   मा॥

मुञ्चाधर मयि कृष्ण बिभेमि
पूतना हता पानै र्भवता
इति रमया परिहासाद् वारित
केलि र्हरि रभिरक्षतु सो ऽ स्मान्   मा॥

## ३१. देवगान्धार :- आदितालम्

भज रे मानस भाग्यप्रद मिह
भव्यं कुहना गोपकिशोरम् भ ॥

मृगमदतिलकं विपुललाटे
वक्षसि कौस्तुभ मुपमिततरणिम्
नासाग्रे नवनवमुक्ताफल
मनुकलयन्तं पाणौ वेणुम् भ ॥

नवमणिनिचितं ललितं वलयं
ग्रीवाया मुरुमुक्ताहारम्
अखिलांगे हरिचन्दनलेपं
वदनसुधांशौ ज्योत्स्नापूरम् भ ॥

शिञ्जाशिञ्जितमञ्जुलगुञ्जन्-
मञ्जीरं निजचरणसरोजे
धारयमाणं व्रजवनितामणि -
वलयित मद्भुतनटनानिपुणम् भ ॥

## ३२. तोडिराग :- रूपकतालम्

वेणुगोपबाल हरे वेंकटेश श्रीहरे वे ॥

कति गतानि मम जनूंषि
कति कृतानि भुवि तपांसि
अपितु लक्ष्यसिद्धि रेव
नाभवन् ममाधुनापि वे ॥

नैकदाऽपि मयि कटाक्ष
वीक्षितानि पातितानि
किमपराध मकरवं नु
नप्रसीदसि किमिति भो वे ॥

ब्रुवे व्यथां जगति कस्य
कोनु वारयति ममाधि
मगतिगति रिहास्ति कोनु
सुगतिगति रिहास्ति कोनु वे ॥

अहो महोमहितरूप -
भाग्य दर्शनं ममेश

कदा भविष्यतीति तह -
    तहायते मनोपि मे                    वे ॥

मोहतिमिरपिहितहृदा -
    काशजगति कदा भासि
अमृत करोविमलभाव
    भानि भान्ति मे कदानु                    वे ॥

मधुरमधुरसुधापूर
    पूर्णमानसे कदानु
क्रीडसि मम राजहंस
    देवता यथेच्छ महह                    वे ॥

भक्तवत्सलेति विनत
    पालकेति माधवेति
लोकनायकेति मम सु -
    भाग्य देवतेति सदा                    वे ॥

मुनिमनोहरेति मुरलि
    मोहनेति मुक्तिदेति

संस्तवीमि सदयहृदय
हृदिभवन्त मनारतम् वे ॥

160 ३३. भैरवी राग :- जंपेतालम्

जानीहि जानीहि वैधेय जानीहि
सर्वतो वैष्णवी शक्ति रेवास्ते -
विश्व मेवहि महाविष्णु रिति विश्व मपि
सर्वं महाविष्णु रेवेति सेवस्व जा ॥

अपिधाय मन्दिरद्वाराणि किं नु रे
अज्ञानबन्धुरे उपविशन् मन्दिरे
धूपदीपैर् वृथा जपतपोभि स्सदा
चेतसा चपलेन यापयसि कालम् जा ॥

अभिमानमेदुरं स्नेहशून्यं महा
दंभदीपं मुधा ज्वलयन् विमोदसे
मालिन्यदूषितं परिमृजन् मानसं
स्वान्तस्स्फुरद्-ज्योति रीष दवलोकस्व जा ॥

दुर्मानधूपिते स्वार्थकलुषीकृते
कौटिल्यकाकोलमूच्छिते धनिगणे
ईश्वरो नहि वसति सतु वसति कृषिकृतां
दुर्भगाना मेव सुकृतिना मन्तरे जा ॥

## (7 ○ ३४. हंसध्वनि राग :- आदितालम्

श्रीवनमाली वितरतु मे हरि
रमलमुदावहसंपद मनिशम् श्री ॥

उदरे निहिताजाण्डकटाहो
नन्दयशोदातनयो यो ऽ भूत्
मात्रोलूखलनियतो यो ऽ भूद्
वेदै रविदित तममहिमापि श्री ॥

चतुराननपञ्चाननमुखसुर
निकरानवगतचरितोपि सदा
यो विजहारा भीरकुटीरे
संश्रितसुलभो यमुनातीरे श्री।

श्रीरमणी मणिवरणीयोज्वल
रुचिराकृति रपि योऽयं स्वैरम्
वल्लववनिताचन्दनचर्चित
कुचसीमसु योऽरंस्त च नितराम् श्री॥

निजपदशरणागतसुरनिचया
यामृतदायी विश्वविधायी
योऽचूचुर दाभीरकुटीरे
ष्वतिगुप्तं दधि नवनीतम् श्री॥

## ३५. मालकौंस राग :- जंपेतालम्

श्रीवेणुगोपाल संसारतरुमूल
शृंगारमयलील चेगुर्तिपुरपाल श्री ॥

वृन्दारकानन्द सन्धानपारीण
गोविन्द वन्दारुमन्दार पाहि माम् श्री ॥

इन्दिरासुन्दरीहृदयाविन्दमधु -
माद्यन्मिलिन्द मुचुकुन्दादिबन्धो श्री ॥

इन्दीवरश्याम यदुकुलाम्बुधिसोम
त्रातामरस्तोम संश्रितार्तिविराम श्री ॥
रासकेलीलोल दासपालनशील
व्यासनुतगुणजाल भासितामहेल श्री ॥

राधाहृदरविन्द बाधाहरमिलिन्द
रदनापजितकुन्द मदनतात मुकुन्द श्री ॥

## ३६. श्री राग :- जंपेतालम्

मंगलं चेगुर्ति वेणुगोपालाय
श्रीरुक्मिणीसत्यभामासमेताय मं ॥

मन्दस्मितालापमधुराधरोष्ठाय
शतसहस्रेरम्मदावलीललिताय
शतकोटिशरदिन्दुसुषमामनोज्ञाय
शतसहस्रार्यमद्युतिपरिस्फीताय मं ॥

विश्वमोहनललितलावण्यपरिवाह -
नवचमत्कृतिकलास्फुरितहरिदन्ताय
स्वापांगलेशप्रसारावकल्पित -
ब्रह्मैन्द्रशिवशक्तिकोटिविस्पन्दाय मं ॥

शिवविरिञ्चिप्रभृतिसुदुरूहमधुवाह -
पदपद्मपांसुकणपरमप्रभावाय
कादम्बिनीकोटिरुचिपूरपूर्णाय
व्रजसुन्दरीतप्ततनुचन्दनाय ते मं ॥

रासलीलोचिता सेचनकवेषाय
    स्रस्तनवमणिखचितहारादिभूषाय
भ्रमराभचिकुरकुललसितवदनाब्जाय
    नलिननयनान्तविस्फुरितनवशम्पाय    मं ॥

चलितकुण्डलकान्तिकुसुमितकपोलाय
    श्रमसलिललवलुलितविलसितशरीराय
व्रजवधूपरिहसितकिलिकिञ्चितास्याय
    सत्यसुन्दरशिवोदारस्वरूपाय    मं ॥

कविभावनास्फुरद्भावार्थविभवाय
    सर्वमंगलकलासंपन्नचेष्टाय
विश्ववाङ्मयकुशेशयमधुस्यन्दाय
    विश्ववाङ्मयवर्णितोदाररूपाय    मं ॥

विश्ववाङ्मयशिल्पनिर्माणनिष्णाय
    विश्वसौन्दर्यसौभाग्यैकमूलाय
विश्वसाम्राज्यनिर्वहणैकदक्षाय
    विश्वसन्तानसंक्षेमैकतानाय    मं ॥

## ३७. भज मानस

नरकिंनर सुरचारणनतपावनचरणं
मधुसूदन मसुरावलिमदमाथननिपुणम्
हनुमन्मुख सुजनावलिघनमानसशरणं
भजमानस रघुनायक मघशोषक मनिशम् ॥

क्षितिकंटक सुरबाधक दितिजावलिशमनं
कृतिनां पति मतिमोहन मतिसुन्दरवदनम्
उपलोचनजलजासनविनुतामलचरितं
रुचिरामल न लिनायतनयनं भज सततम् ॥

कुशलंकर मसमाम्बक विमलात्मविहरणं
सकलाश्रितकलुषान्तक मकलंक मचलनम्
करुणारसवरुणालय मरुणान्वयतिलकं
मधुरं भज मधुसूदन मखिलामरशरणम् ॥

जनकावनिपतिजापति मसुराचलभिदुरं
स्मरमोहन मतिमञ्जुल मरिभीकर ममलम्

मधुरीकृतमुनिमानस मधरीकृतमुदिरं
भजमानस रघुनायक मनिशं सुरशरणम् ॥

जनकामलवचनादरपरिपालननिरतं
पललाशनकुलशोषण मुररीकृतविनतम्
दशकन्धर गिरिपेषण मनुमोदितसुमतिं
भज मानस रघुभूषण मनिशं धुतविकृतिम् ॥

श्रुतितस्करगुरुदानवहननाद्भुतशफरं
सुरदानवपरिपालनदलनायतकमठम्
क्षितिपातनपरकाञ्चननयनक्षय निपुणं
स्वपदाश्रितपरिरक्षणनरसिंह मुदारम् ॥

बलिदानव मणिमस्तक निहिताद्भुतचरणं
मदमेदुरनृपसंहति हननोद्यतपरशुम्
सुरभीषणगुरुरावणनिधनाहितधनुषं
मुसलायधमशकीकृतसकलासुरनिकरम् ॥

पशुहिंसनपरदुर्जनसुजनीकृतिसुविधा -
चतुरं खलकुटिलाहित यवनान्वय दलिनम्

श्रितमानवहितकारिण मतिपावनचरितम्
भज सज्जन हरिचन्दन मतिमञ्जुलवपुषम् ॥

कलिवारण मरुणारुणनलिनच्छविविभवं
चतुराननगिरिशादिमसकलामरविनतम्
मुनिमोहनरघुनुन्दन तव पावनचरणं
शरणं भवतरणं मम हरता दुरु दुरितम् ॥

करुणां मयि करुणालय कुरु दीनदयालो
शरणागतजनपोषक मुदिरोज्ज्वल सुतनो
महिमोन्नतपदभासुर रघुवंशहिमांशो
भवते नवसुमनोञ्जलि रनिशं मम भवतात् ॥

तुहिनकरसदृशमुख महिमकरदीप्रं
श्रुतिवचनविदितगुण मतिमदनमूर्तिम्
दितितनय दवदहन ममलजनगम्यं
रघुतनय मघशमन मनघगति मीडे ॥

कलिशमन यमदमनहृदयपुटशायिन्
अहिमकरकुलतिलकविबुधविनुतांघ्रे

मणिमकुटरुचिनिचितनिटलतलभासिन्
रघुतनय वसहृद्य नलिनपुटभागे ॥

मधुमधुर रसभरितचरित मुरुरूपं
खरनखरशिखर परिदलित दितिसूनुम्
धृतकनक मयवसन मदिति सुतपालं
जप परमपुरुष मुरुनिशितकरवालम् ॥

दशवदनगहनदववदहनबाहुं
श्रुतिमकुटसदुपवनपिक ममलरूपम्
मुनि हृदयनलिनवनकलमधुरहंसं
भजतु मम हृदय मनुदिवस ममरेशम् ॥

जनकजामनोविहार जगदुदार रघुकुमार
मेरुधीर कदनशूर धरणिदार जितकुमार
निगमसार परविचार समणिहार शितिशरीर
बलुसुकोंड रामचन्द्र पाहि सद्गुणैककेन्द्र ॥

अमलकमलदलविशालदृगभिराम हृदभिराम
चटुलकुटिलशठनिशाट कुलविराम सुरललाम

परशुराममदविराम मिहिरवंशजलधिसोम
बलुसुकोंड रामचन्द्र पाहि सद्गुणैककेन्द्र ॥

नारदादिसुरमुनीन्द्र विनुतविविध सुगुणजाल
मधुरमधुर मुदिररूप मुरलिगानरसविलोल
सकललोक सुखविधान चातुरीधुरीणलील
बलुसुकोंड रामचन्द्र पाहि सद्गुणैककेन्द्र ॥

भक्ति भरित भक्तनिरत भक्त भक्तियोग सक्त
मुक्तिकामहृदयरक्त सक्तसंगहरणशक्त
व्यक्त शक्ति गुणकलाक्रियाकलाप सत्कलाप
बलुसुकोंड रामचन्द्र पाहि सद्गुणैककेन्द्र ॥

दूषणादिदुष्ट दनुजतूलजालविलयवात
गौतमादि सकलतापसालिविनुतविमलचरित
सकलभूतजातनिष्ठितस्वरूप मोदभरित
बलुसुकोंड रामचन्द्र पाहि सद्गुणैककेन्द्र ॥

अवनिरमण रमतिरमण शरणशरण मूलकरण
अरुणनलिनचरण पुण्यचरण निखिलदुरितशमन

शमदमादिसकलसुगुणजन्मभवन विश्व भवन
बलुसुकोंड रामचन्द्र पाहि सद्गुणैककेन्द्र ॥

दशशतांग सुकृतपाक दशमुखादिदुष्टदनुज-
गोत्रभिदुर कोटिरविमरीचिवीचिवलयितास्य
लक्ष्मणाग्रजात शातकुम्भसिचय सदयहृदय
बलुसुकोंड रामचन्द्र पाहि सद्गुणैककेन्द्र ॥

भवपृदाकुदष्टजीवजीवनौषधायमान
मदविदूर मुनिकलत्रशापशमन पापशमन
श्रीनिवास सितमयूखशितमयूखनयनयुगल
बलुसुकोंड रामचन्द्र पाहि सद्गुणैककेन्द्र ॥

वासुदेव देवदेव वामदेवविहितसेव
योगिहृदयकुहरगगनचञ्चलावभासमान
गाधिनन्दनाध्वरावनैकनिरत साधुनिरत
बलुसुकोंड रामचन्द्र पाहि सद्गुणैककेन्द्र ॥

भिन्दि सकलतापजाल मिन्दिरासतीसनाथ
देहि सर्वसंपदो निधेहि नूलशक्ति मीश

जहिहि योगसुप्ति मर मुरीकुरु स्वभार मद्य
बलुसुकोंड रामचन्द्र पाहि सद्गुणैककेन्द्र ॥

ग्राम्यगायक निर्बन्धात् इमा संगीतगीतयः
अष्टवर्षेण सन्दृब्धाः तदानन्दधवेषमया ॥

जय जय

जय जय करुणामृतरसवर्षिणि जय जय विश्वकुटुम्बिनि जनी
जय जय नीलेन्दीवरनयने जय जय संसृतिजलनिधितारिणि

दशशतदलपरिलसदरविन्दद्युतिमयमन्दिरसततासीने
शशिशतसुषमासुन्दरवदने शाश्वतशम्पा सम्पल्ललिते

कोमलमलयसमीर समीरितललितलवङ्गलतामयकुञ्जे
सुरभिलसुन्दरसुमशयनीये विहर प्रभुना हृदयोद्याने

सकलसुरासुर मकुटमसारमसारितकार्तस्वरपदपीठे
सृष्टिस्थितिलयकारिणि वैष्णवि सात्विकशक्ते स्पन्दसुन्दरि

निस्तनयित्नुविहायसभासे निष्पन्दाकूपाराभासे
आधाराभिधसरसिजतपूतस्वर्णाभे वनमालिनि जय जय

आज्ञाचक्रसरोरुहविमल स्फटिकविद्युते सर्वशेषिणि
मात रनाहत सरसिजविद्रुम विहरण शालिनि देवि हिरण्मयि

ताटंकीकृतशितकरहिमकरबिम्बे जम्भारातिनिषेव्ये
तत्वाम्भोरुहसन्दोहक्रमविहरणमोदिनि हंसवाहिनि

स्वकटाक्षाञ्चललेशाविष्कृतकोटित्रिपुरे त्रिपुरारिनुते
श्रीनारायणकरुणावाहिनि श्रीनारायणहृदयविहारिणि

बालातपरुचिहारिमनोहरतपनीयाम्बरभासुरमूर्ते
दुस्तरदुर्भर संसृतिसलिलधि मग्नार्ता श्रितचेतनतारिणि

दरहसितामृतमधुरज्योत्स्नापरिवाहाञ्चितसुन्दरवदने
क्रशिमकलंकविमुक्ततुषारमरीचिमनोहरमुग्धमुखाब्जे

शिञ्जन्नवमणिमञ्जुलनूपुरभासुर पादाम्भोरूहयुग्मे
रञ्जन्नवनवरत्नगणाञ्चितचञ्चत्काञ्चीदाम मनोज्ञे

नवजलजलधरमुक्तोदारोज्ज्वलमुक्तामणिहारविराजिनि
दाडिमफलबीजावलिजित्वररदनमरीचिप्रोन्मिषदधरे

सततसमाहितयोगिहृदम्बरभासुरचञ्चच्चपलालेखे
अम्लानप्रतिभानविकस्वरमधुमयरसमयभणितिं देहि

बालाकोटिकराम्बुजवीजितचञ्चच्चामरवैभवशालिनि
नयनाञ्चलतलकरुणामृतरसधाराशिशिरीकृतबहुलोके

सन्ततकविकुल रसनामसृणितलास्यगृहांगणलासिनि जयजय
तत्त्वाम्भोजविहारिणि हारिणि विद्याधीश्वरि शेषशयाने

हृदयन्तुदबहुतापभयंकरतुददसिवनदावानलकीले
निजपदपाथोजातपरागामृष्टश्रीचक्राभिधपीठे

अर्यममण्डलमध्यविभास्वति विद्युन्मण्डलदीप्रमरीचे
तारामण्डलचञ्चलदीप्ते ज्योतिर्मण्डल मञ्जुगभस्ते

ऐन्दवमण्डलचारुज्योत्स्ने पावकमण्डलपिंगलहेते
जननि हिरण्मय मण्डल पाण्डरकान्तितरंगिणि मंगलमूर्ते

गोपाय तमोमण्डलतारा चारुचमत्कृतिवैचित्रि रमे
दशविधनादप्रणवामृतरसमत्तसमाहितचित्तविनोदिनि

पञ्चाकाशविहारविलोलमरीचितरंगिणि विनतार्तिहरे
अम्ब चतुर्दलतप्तसुवर्णसरोरूहवासिनि श्रीतन्त्रायिणि

षड्दलशोण सरोजविहारिणि दशदलपीताम्भोजविनोदिनि
द्वादशदलसितजलजविनोदिनि षोडशदलनीलाम्बुजचारिणि

द्विदलोज्ज्वलमाणिक्यद्युतिमय सारसपीठनिवासिनि जयजय
जय सर्वेश्वरि जय वागीश्वरि जय जय विश्वकुटुम्बिन मातः

**प्रणीतं षोडशाब्देन मया संगीत माधवम्**
**मातु श्श्रीगोपमाबाया अनुरोधाद् बुधांमणेः**